# ॥ श्रीगणाधिपति पञ्चरत्नस्तोत्रम् ॥

ॐ सरागिलोकदुर्लभं विरागिलोकपूजितं
सुरासुरैर्नमस्कृतं जरापमृत्युनाशकम् ।
गिरा गुरुं श्रिया हरिं जयन्ति यत्पदार्चकाः
नमामि तं गणाधिपं कृपापयः पयोनिधिम् ॥ १॥

गिरीन्द्रजामुखाम्बुज प्रमोददान भास्करं
करीन्द्रवक्त्रमानताघसङ्घवारणोद्यतम् ।
सरीसृपेश बद्धकुक्षिमाश्रयामि सन्ततं
शरीरकान्ति निर्जिताब्जबन्धुबालसन्ततिम् ॥ २॥

शुकादिमौनिवन्दितं गकारवाच्यमक्षरं
प्रकाममिष्टदायिनं सकामनम्रपङ्क्तये ।
चकासतं चतुर्भुजैः विकासिपद्मपूजितं
प्रकाशितात्मतत्वकं नमाम्यहं गणाधिपम् ॥ ३॥

नराधिपत्वदायकं स्वरादिलोकनायकं
ज्वरादिरोगवारकं निराकृतासुरव्रजम् ।
कराम्बुजोल्लसत्सृणिं विकारशून्यमानसैः
हृदासदाविभावितं मुदा नमामि विघ्नपम् ॥ ४॥

श्रमापनोदनक्षमं समाहितान्तरात्मनां
सुमादिभिः सदार्चितं क्षमानिधिं गणाधिपम् ।
रमाधवादिपूजितं यमान्तकात्मसम्भवं
शमादिषड्गुणप्रदं नमामि तं विभूतये ॥ ५॥

गणाधिपस्य पञ्चकं नृणामभीष्टदायकं
प्रणामपूर्वकं जनाः पठन्ति ये मुदायुताः ।
भवन्ति ते विदां पुरः प्रगीतवैभवाजवात्
चिरायुषोऽधिकः श्रियस्सुसूनवो न संशयः ॥ ॐ ॥

॥ इति दक्षिणाम्नाय श्रिङ्गेरी श्रीशारदापीठाधिपति
शङ्कराचार्य जगद्गुरुवर्यो श्री सच्चिदानन्द
शिवाभिनव नृसिंहभारती महास्वामिभिः विरचितम्
श्री गणाधिपति पञ्चरत्न स्तोत्रम् सम्पूर्णम् ॥